वीघ्ननाशोगणादिपः धुम्रकेतुगणादीक्षेभालचंद्रोग
जाननःद्वादिशेतानीनामानी: जपठेछुणीयादिपः वीद्या
रंभेविवाहेच: प्रवेसेनीर्गमेस्तथा: संग्रामेसंकुटेचैवः
विघ्ननतस्यनजाईन्ये: शुकलांबरधराविष्णु: शसीव
र्णाचतुरभूजं: प्रसनंवदनं: ध्याये भ्रवेवीघनं:प्र

विघ्नाद्यैः गंधादि भीशपूजेः अथगणेसपूजाविधी

ॐ जजमानं गृहपतनीकं आस्मानस्नाचेः प्राणामू

खोःप्राणाप्नामीविनीयोगः गजाननं कुलदेवताईष्ट

देवताः सहस्रनूति भ्रामरादिन्यासाकृतः सोमकस

कदंतसेः कपिलोगजकरर्णाकिः लंबोधरश्चविगटो

जो नित्यं शोणितरोगः ११ जलप्रियो वैद्यवहारशीलो निजालयावासविलासशीलः सदान्नदाता तिथिपाप्रविष्टः स्याद्द्वादशीजो म-
नुजः प्रजावान् १२ कृपान्वितः सात्विकतावियुक्तः खलं च कंठस्वरणप्रवृत्तिः नरोतिप्ररस्यन्नरो प्रकामं त्रयोदशीना-
मतिथिप्रसूतौ १३ क्रूरोतिम्हारस्त्वनरः सहासः कंदर्पलीलाकुलचित्तवृत्तिः स्याद्दुःसहोत्यंतविरूपभाषी चतुर्दशी-
जः पुरुषः सरोषः १४ अतिमृदुललितकायो न्यायसंप्राप्तवित्तो वृषुयुवतिसमेतो नित्यसंजातहर्षः प्रबलबलविलासोऽनं-
तकारूल्पपुगल्पे गुणगणपरिपूर्णः पूर्णमाजातजन्मा १५ शांतो मनस्वी पितृमातृभक्तः क्लेशप्राप्रवित्तश्च समागमेष्ठा
मान्यो जनानां हतकांतिहर्षः दर्शोद्भवः स्यात्पुरुषः सहर्षः १६ अथ वारफलानि प्रतोल्पकेशो विजयी रणाग्रे श्यामा-
रुणः पित्तचयप्रकोपः दाता महोत्साहयुतो महौजा रविर्दिने दिने वा स्यात् मनुष्यः १ प्राज्ञः प्रशांतः प्रियवाग्विधिज्ञः
शास्त्रान्तरेष्वप्यलब्धवृत्तिः सुरेवच्चंद्रः खेचरसमस्वभावो वारे नरः शीतकरस्य जातः २ वक्रोक्तिरत्यंतरणप्रियः स्या-
न्नरेंद्रमंत्री च धरोपजीवी सत्वान्वितस्तीव्रतरस्वभावो दिने भवेत्पावनिनंदनस्य ३ सद्रूपशाली मृदुवाग्विलासः
श्रीमान्कलाकौशलतासमेतः बलिक्रियायां हि भवेदभिज्ञः प्राज्ञो गुणाढ्यः सौम्यजदिनोद्भवो यः ४ विद्वान्धनी सर्वगु-
णोपपन्नो मनोरमः क्ष्मापतिलब्धकामः आचार्यवर्यश्च जनप्रियः स्याद्वारे गुरोर्यस्य नरस्य जन्म ५ सुनीलसत्कुंचितके-
शपाशः प्रसन्नवेषो मतिमान्विशेषात् स्रक्कांबरः प्रीतिधरो नरः स्यात्सन्मार्गगो भार्गववारजातः ६ अकालसंप्रा-
प्तजराप्रवृत्तिर्विलोकितो दुर्बलदेहयष्टिः तमोगुणाक्रूरचयाभिभूतः शनैर्दिने जाततनुर्मनुष्यः ७ अथ ऋक्षफ-
लम् सदेवदेवाभ्युदितो विनीतः सत्यान्वितः प्राप्तसमस्तसंपत् योषाविभूषात्मजभूरितोषः स्यादश्विनीजातन-

पतिर्विद्वान् १

[illegible] सदापकीर्त्तिर्हिमदापवादे नो नाविनीतैः अविनीतकालः जलातिभीरुश्चपलः खलः स्यान्नाराणी प्रणीतो भरणी
प्रजातः २ क्रुधाधिकः सत्यधनैर्विहीनो हृत्यादनोऽन्यत्रमतिः कृतघ्नः कठोरवाग्गर्हितकर्मकृत्स्याच्चेत्कृत्तिका जन्मनि यस्य
जंतोः ३ धर्मकर्मकुशलः कृषीवलश्चारुशीलविलसत्कलेवरः वाग्विलासकलनाविलासयो रोहिणी भवति यस्य
जन्मभं ४ शास्त्राभ्यासरतो विनीतः सदानुरक्तो गुणिनां गुणेषु भोक्तान्नपस्तेह भवेन्मृगर्क्षे संस्कारगेहुनो मृगजा।
तजन्मा ५ क्रोधाधिको रूक्षशरीरकांतिर्विघ्नप्रियः कोपभृतः कृतघ्नः प्रसूतिकाले च भवेत्किलार्द्रा दयार्द्रचेता न भवे
न्मनुष्यः ६ प्रभूततंत्रः कृतगात्रयत्नः सदन्नचामीकरभूषणाढ्यः दाताप्रतापी बहुसंयुतश्च पुनर्वसुर्यस्य भवेत्प्रसूतौ ७
प्रसन्नगात्रः पितृमातृभक्तः स्वधर्मशक्तो विनयाभियुक्तः सन्माननानाधनवाहनानां लाभं च वेन्मनुष्यः स्वल्पप्रजन्मा ८
वृथाटनः स्याद्अतिदुष्टचेष्टः कष्टप्रदश्चापि वृथाजनानां सार्पे सदर्पो हि वृथार्थितार्थः कंदर्पसंतप्तमना मनुष्यः ९
कठोरचित्तः पितृभक्तियुक्तः स्त्रीत्वस्वभावस्तनवद्यविद्यः चेज्जन्मभं यस्य मघा न घास्यान्मतिः सदारातिविघातदक्षः
१० भूरित्यागी साहसी भूरिमंतोकोपान्तोपिस्याच्छिरालोतिदक्षः धूर्तः क्रूरोत्यंतसंजातगर्वः पूर्वाफाल्गुन्यासिवेज्ज।
न्मकाले ११ दातादयालुः सुतरांसुशीलो विशालकीर्त्तिर्नृपतिप्रधानः धीमान्नरोत्यंतमृदुस्वरः स्याच्चेदुत्तराफाल्गुनि
काप्रसूतो १२ दातामनस्वी सुतरां यशस्वी भूदेवदेवार्चनकृन्नयत्नः प्रसूतिकालेयदि यस्य हस्तो हस्तोद्गतानस्य समस्त
संपत् १३ प्रतापसंतापितशत्रुपक्षो नयेतिदक्षश्च विचित्रवासाः प्रसूतिकाले यदि यस्य चित्रा तु द्विर्विचित्राभरणा।
न्वयस्य शालो १४ कंदर्परूपप्रभया समेतः कांतापरप्रीतिकरः प्रसन्नः स्वातिःप्रसूतौ मनुजस्य यस्य भवेन्नृपप्रा

हृमाः

यात्र योदशी सानध्याय दिनं पक्षे द्वितीयादि त्रयोदश्यंता नामेकादशानां स्वाध्यायानामेव विधानात् किंच यस्यां च
योदश्यां भूत्ता राति थिश्चतुर्दशी द्वितीये वदर्श स्यात्तिसाप्यनध्यायदिनमित्यर्थः श्रुतिः श्रवणद्वादशी वनु मासस्य
द्वितीयास्तोश्च गर्गेणोक्ताः श्रवणार्द्रे नपदस्य द्वितीयाच विधुक्षये चातुर्मास्य द्वितीयास्ताः प्रवदंति मनर्षयश्
ति तथाच पूर्वचोर्ध्वमनध्यायमहः संक्रमणे निशि दिवा पूर्वोत्तरं रात्रिमिति वेदविदो विदुरिति मनुरपि जना
नां दशरात्रं च श्वावेच समुपस्थिते नाधीयीत द्विजो नित्यं न चैवाकालिकेषु च महागुरोद्वादशाहं वेदस्याध्य
यनं त्यजेदिति याज्ञवल्क्योपि अहं स्त्रेनेष्वनध्यायः शिष्यर्त्विग्गुरुबंधुषु उपाकर्मणि चोत्सर्गे स्वशाखश्रो
त्रिये मृते संध्यागर्जितनिर्घोषभूकंपोल्कानिपातने समाप्य वेदं द्युनिशमारण्यकमधीत्य चेति तथा पशुमं
डूकनकुलश्वाहिमार्जारमूषकैः कृतेंतरे त्वहोरात्रं शक्रपाते तथोच्छ्रये इति शक्रपात इति इंद्रध्वजोत्थापन
दिने उच्छ्रय दिने चान्यस्त्र विशेषः स्मृत्यर्थसारे प्रोक्तः चतुर्दश्यष्टमीपर्वप्रतिपत्सु च सर्वदा धर्मेघानामन
ध्याय स्त्वंतरा गमने षु च तथादि स्मृतिशीलानां बहुवेदप्रपाठिनामिति अन्यश्च विशेषोऽपरार्के प्रोक्तः
चतुर्दश्यष्टमीपर्वप्रतिपद्वर्जितेषु च वेदांगन्यायमीमांसाधर्मशास्त्राणि चाभ्यसेत् इति तथा स्मृतिचंद्रिका
यांच उदये समये वापि मुहूर्तत्रयगामि यत् तद्दिनेन दहोरात्रं चानध्यायविधौ विदुरिति बहुवचनेता
वदेव त्वनध्याया ननन्मि स्त्रदिनांतत्वं उपवासव्रतादीनां तिथिमाहुस्तथैव चेति इदं च देशाचारतो व्य
वस्थाप्यं क्वचिद्देशे यावद्ग्रहणानध्यायं कुर्वीतेति इत्यनध्यायतिथिनिर्णयः अथ पर्वोत्तम भावित्वात् उप
रागो निरूप्यते पर्वप्रतिपदोः संधौ राहुणा रवींद्वोर्ग्रहणमुपरागः उपरागो ग्रहो राहुग्रस्ते त्विंदौ च पूष्णि

चेत्यमरः पर्वशब्देनामावास्यापौर्णमास्यात्मकं पर्वात्रोच्यते तथा च वृद्धगार्ग्यः पूर्णिमाप्रतिपत्संधौ राहुः संपूर्ण
मंडलम् ग्रसते चंद्रमर्कं च दर्शप्रतिपदंतरे अथ कालविभागः रवींद्वोराहुसंस्पर्शमोक्षकालो यावान् त्रिवृतः पं
चादिघटिकात्मकः स्यादर्द्धं पूर्वापरतिथ्योर्भवेत् तथा च पर्वणोंत्यो भागः स्पर्शकालः प्रतिपदादिमो भागो
मोक्षकालः स्यात् एतावान्मिश्रितः कालो ग्रहणे पुण्यकालः स्यात् तदुक्तं पूर्वान्ततिथ्योरर्द्धार्द्धकालः स्यात्स्पर्श
मोक्षयोरिति अर्द्धार्द्धमिति समभागाभिप्रायेण ज्ञातव्यमिति दैवज्ञाः पुस्यार्द्धार्द्धसमेंशक इत्यमरोक्तेः तदुक्तं ब्रह्म
सिद्धान्तेपि यावान्कालः पर्वणोंते तावान्प्रतिपदो द्विजः रवींदुग्रहणे नेहाः सपुण्योमिश्रणाद्भवेत् अनेहाः का
लः अत्र कर्तव्यमुच्यते पूर्वकाले कृत्वा शुक्लाद्युक्तफलप्राप्त्यर्थं उपराग निमित्ते स्नानं करोमीति संकल्प्याव
नं धायस्नौ विदध्यात् तथा चोक्तम् राहोर्दर्शनमात्रेण पुण्यकालः प्रकीर्तितः पुण्यं कोटिगुणं मध्ये मुक्तिका
ले त्वनंतकमिति ग्रासकाले तयोः स्नात्वा ग्रस्ते होमं समाचरेत् मुच्यमाने श्राद्धदाने मुक्ते स्नानं विधीयते स्ना
नं दानं जपं श्राद्धमनंतं राहुदर्शने अन्यच्च स्नानं विधाय गंगादौ प्राणायामं च तर्पणम् गायत्र्याश्च जपं कृ
त्वा ततो होमं समाचरेत् व्याहृतिभिर्ग्रहमंत्रैश्च स्वशाखोक्ते अशक्तितः आम श्राद्धं ततः कार्यं महेव तस्य वि
शेषतः दानं दद्याद्यथाशक्ति हिरण्यान्न गवां भुवः अन्यान्यपि च दानानि कृत्वा स्यात्सुखी भवेत् गंगाप
दोपादानं महाफलद्योतनाय यदुक्तं वसिष्ठेन इंद्वोर्ल्लक्षगुणं प्रोक्तं रवेर्दशगुणं ततः गंगातोये तु संप्राप्ते
इंद्वोः कोटी रवेर्दश गवां कोटीसहस्रस्य सम्यग्दत्तस्य यत्फलं तत्फलं जाह्नवीतोये राहुग्रस्ते निशाकरे
दिवाकरे च नर्मदा दशसंख्यमदाहते चंद्रसूर्यग्रहे चैव योवगाहेत जाह्नवीम् स स्नातः सर्वतीर्थेषु किम
र्थमटते महीम् अन्यास्वपि महानदीषु स्नानं पुण्यम् महानदीषु चान्यासु स्नानं कुर्याद्यथाविधि इति वचना

त्रिकायां तु परान्नं निशि भोजनं मैथुनं तिलपिष्टं च दिवा नक्तं च वर्जयेत् इति पितान्न निषेधो विशेषतः स्त्रीणामपि
पुंसां तु पुरुषार्थत्वेन निषेधात् तदुक्तम् बहुजल्पं परान्नं च रात्रौ भोजनमैथुने तिलपिष्टं मांसं तैलं सोमावास्या
यां विवर्जयेत् तथा सूर्यविंबगते चंद्रे परान्नं यो ऽभिमन्यते न स्यमासकृतं पुण्यं यस्यान्नं तस्य तद्भवेत् व्रतयज्ञा
दिके कार्ये व्रतस्ये धर्मकर्मणि नाश्नीयात्तु मन्यस्य यस्यान्नं तस्य तद्भवेत् किंच वनस्पतिगते सोमे यस्तु छिंद्या
द्वनस्पतिम् तद्भवेत्तस्य संपूर्णं पातकं चोपपातकम् विधुक्षये च यश्छिंद्यात्तृकुशांश्च समिधस्तथा सर्वदा वस्थिते
सोमे हिंसायो ब्रह्महा भवेत् ॥ ॥ इत्यादि समावास्यासामान्यधर्माः ॥ अथ पूर्वोक्तविधेर्वटसावित्र्याः पुनर्विधिः प्र
काश्यते अमायां तु तथा ज्येष्ठे वटमूले महासती त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत् अशक्तातु त्रयोद
श्यां नक्तं कुर्याज्जितेंद्रियः अयाचितं चतुर्दश्याममायां समुपोषणम् गृहीत्वा वालुकां पात्रे प्रस्थमात्रां युधिष्ठिर त
तो वंशमये पात्रे वस्त्रयुग्मेन वेष्टिते सावित्रीप्रतिमां कृत्वा सर्वावयवशोभिनी सौवर्णीमृण्मयीं वापि स्वशक्त्या
विनिर्मिताम् सार्धं सत्यवता साध्वीं फलनैवेद्यदीपकैः वटावलंबितं कृत्वा काश्मीरं युधिष्ठिर विरूढैः सप्तधान्यै
श्च बहुधा संप्रकल्पितैः रजन्यां पट्टसूत्रैश्च शुभैः कुंकुमकेशरैः सावित्र्याख्यानकं चापि वाचनीयं द्विजोत्तमैः रा
त्रौ जागरणं नृत्यगीतपरः सरम् ततः प्रभाते विधिना पूर्वोक्तेन नराधिप तामपि ब्राह्मणे दद्यात्त्रगोपत्यदेमाय
येत् तत्र दानमंत्रः सावित्रीयं मया दत्ता सहिरण्या महासती ब्रह्मणः प्रीणनार्थाय ब्राह्मण प्रतिगृह्यतामि
ति एवं दत्त्वा द्विजेन्द्राय सावित्रीं तां युधिष्ठिर नैवेद्यादि च तत्सर्वं ब्राह्मणस्य गृहे नयेत् एवं दशपदानां छेत्त्वा
वै श्रमपुनराविशेत् तत्र श्रुत्वा हविष्यान्नं ब्राह्मणैर्वांधवैः सह विसर्जयेत्ततो विप्रान्सावित्री प्रीयतामिति
व्रतेनानेन राजेंद्र वैधव्यं नाप्नुयात्कचित् इति वटसावित्रीव्रतम् श्रावण्याममावास्यायां जीवपुत्रिकाव्र

अ॰ चै॰ पु॰
१०

देव

नम् तत्र पूजामंत्रः ॐ नमो देवि शुभे देवि जीवपुत्रि शुभप्रिये यथा शिवं शिवं रक्षसे मे तथा सुतम् इति जीवपुत्रि
कापूजनम् अथ दीपावलीसुखसुप्तिकापरपर्यायामावास्यायां तत्र लक्ष्मीपूजादिकं नववस्त्रधारणं दीपदानं
च कुर्यात् दिवा न तत्र भोक्तव्यं बालवृद्धातुरान्विना इति निर्णयामृते भोजनं श्रेयस्करं श्रोतस्मार्त्तमते तद्दोषो
ऽमावास्यो हि दिवैव भोज्यम् अत्र तु दिवैव भोजने निषेधः काम्यत्वाद्धसवजनस्य ब्रह्मपुराणे प्रदोषसमये लक्ष्मीपू
जयित्वा पुनः स्त्रियः नारीवा वस्त्रसंख्यावन्नैर्मर्त्यैर्नेत्रयोर्दिवि अथैवामावास्यायां देवोत्थकार्त्तिके मासि केशा
वाद्भयं प्राप्य सुप्ताः सुरं दीपैर्दैत्यान् पुनः लक्ष्मीदैत्यभयान्मुक्ता सुखं सुप्ता पयोदरे अतोऽर्थं विधिवत्कार्या
मनुष्यैः सुखसुप्तिका दिवा तत्र न भोक्तव्यमृते बालातुराञ्जनान् प्रदोषसमये लक्ष्मीं पूजयित्वा यथाक्रमम्
दीपवृक्षास्तथा कार्याः शक्त्या देवगृहेषु च दीपमालापरिक्षिप्ते प्रदोषे तदनन्तरं ब्राह्मणान्भोजयित्वादौ विभ
ज्य च बुभुक्षितान् अलंकृतेन भोक्तव्यं नववस्त्रोपशोभितम् स्निग्धैर्मुग्धैर्विदग्धैश्च बान्धवैर्नर्मभिः सहेति अत्रैव
च राजा कौमुदीमहोत्सवं कुर्यात् तदुक्तं ततोऽपररात्रसमये घोषयेन्नगरे नृप सर्वराज्यं बलं लोका यथेच्छं
श्नाभिन लोके श्रापि पुरे हृष्टे स्फुटं धवलिताजिरे कृतचंदनमालाढ्ये चर्चिते वा गृहे गृहे द्यूतपानरते हृष्टे
प॰ नरनारीमनोहरे नृत्यवादित्रसंघुष्टे संप्रज्वालितदीपके दीपमालाकुले रम्ये विध्वस्तध्वांतसंचये प्रदोषे दोषर
हिते शस्ते दोषागमे शुभे वेश्याविलासिनीसार्थैः स्वस्तिमंगलकारिणि गृहाद्गृहं व्रजेत्तीर्थापादाभ्यां गत्वा तापिनि
ततोऽर्द्धरात्रसमये स्वयं राजा पुरं व्रजेत् अवलोकयितुं रम्यं पद्भ्यामेव शनैःशनैः ततः प्रभातसमये नारीभिर्ल
क्ष्मीर्गृहान्निःकाश्यते तदुक्तं एवं गते निशीथे तु जने निद्रार्द्धलोचने तावन्नगरनारीभिः सूर्पडिंडिमवादनैः
निःकाश्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहाङ्गणात् इति अत्र पितृन्तुद्दिश्य विशेषमनोद्घाटनेन तिलतैलेन वा दीप